# Sharabhastotram by Shri Nrisimha from Lingapurana



# लिङ्गपुराणोक्तं श्रीनृसिंहकृत शरभस्तोत्रम्

## Document Information

Text title : Sharabhastotram by Shri Nrisimha from Lingapurana

File name : sharabhastotram.itx

Category : shiva

Location : doc_shiva

Transliterated by : Sivakumar Thyagarajan Iyer shivakumar24 gmail.com

Proofread by : Sivakumar Thyagarajan Iyer, PSA Easwaran psaeaswaran at gmail.com

Latest update : February 22, 2020

Send corrections to : sanskrit@cheerful.com



Please note that proofreading is done using Devanagari version and other language/scripts are generated using **sanscript**.

February 22, 2020

*sanskritdocuments.org*

# लिङ्गपुराणोक्तं श्रीनृसिंहकृत शरभस्तोत्रम्



ॐ श्रीगणेशाय नमः ।

श्रीनृसिंह उवाच -
नमो रुद्राय शर्वाय महाग्रासाय विष्णवे ।
नम उग्राय भीमाय नमः क्रोधाय मन्यवे ।
नमो भवाय शर्वाय शङ्कराय शिवाय ते ॥ १॥

कालकालाय कालाय महाकालाआय मृत्यवे ।
वीराय वीरभद्राय क्षयद्वीराय शूलिने ॥ २॥

महादेवाय महते पशूनाम्पतये नमः ।
एकाय नीलकण्ठाय श्रीकण्ठाय पिनाकिने ॥ ३॥

नमोऽनन्ताय सूक्ष्माय नमस्ते मृत्युमन्यवे ।
पराय परमेशाय परात्परतराय ते ॥ ४॥

परात्पराय विश्वाय नमस्ते विश्वमूर्तये ।
नमो विष्णुकलत्राय विष्णुक्षेत्राय भानवे ॥ ५॥

कैवर्ताय किराताय महाव्याधाय शाश्वते ।
भौरवाय शरण्याय महाभैरवरूपिणे ॥ ६॥

नमो नृसिंहसंहर्त्रे नमः कालपुरारये ।
महापाशौघसंहर्त्रे विष्णुमायान्तकारिणे ॥ ७॥

त्र्यम्बकाय त्र्यक्षाय शिपिविष्टाय मीढुषे ।
मृत्युञ्जयाय शर्वाय सर्वज्ञाय मखारये ॥ ८॥

मखेशाय वरेण्याय नमस्ते वह्निरूपिणे ।
महाघ्राणाय जिह्वाय प्राणापानप्रवर्तिने ॥ ९॥

त्रिगुणाय त्रिशूलाय गुणातीताय योगिने ।

संसाराय प्रवाहाय महायन्त्र प्रवर्तिने ॥ १०॥

नमश्चन्द्राग्निसूर्याय मुक्तिवैचित्र्यहेतवे ।
वरदायावताराय सर्वकारणहेतवे ॥ ११॥

कपालिने करालाय पतये पुण्यकीर्त्तये ।
अमोघायाग्निनेत्राय नकुलीशाय शम्भवे ॥ १२॥

भिषक्तमाय मुण्डाय दण्डिने योगरूपिणे ।
मेघवाहाय देवाय पार्वतीपतये नमः ॥ १३॥

अव्यक्ताय विशोकाय स्थिराय स्थिरधन्विने ।
स्थाणवे कृत्तिवासाय नमः पञ्चार्थहेतवे ॥ १४॥

वरदाय कपर्दाय नमश्चन्द्रार्द्धमौलिने ।
नमस्तेऽवरराजाय वयसां पतये नमः ॥ १५॥

योगीश्वराय नित्याय सत्याय परमेष्ठिने ।
सर्वात्मने नमस्तुभ्यं नमः सर्वेश्वराय ते ॥ १६॥

एकद्वित्रिचतुःपञ्च कृत्वास्तेऽस्तु नमो नमः ।
दशकृत्वस्तु साहस्रकृत्वस्ते च नमो नमः ॥ १७॥

नमोऽपरिमितिं कृत्वाऽनन्तकृत्वो नमो नमः ।
नमो नमो नमो भूयः पुनर्भूयो नमो नमः ॥ १८॥

सूत उवाच
नाम्नामष्टशतेनैव स्तुत्वाऽमृतये न तु ।
पुनस्तु प्रार्थयामास नृसिंहं शरभेश्वरम् ॥ १९॥

यदा यदा ममाज्ञानमत्यहङ्कारदूषितम् ।
तदा तदाऽपनेतव्यं त्वयैव परमेश्वरः ॥ २०॥

एवं विज्ञापयन्प्रीतः शंङ्करं नरकेसरी ।
नन्वशक्तो भवान्विष्णो! जीवितान्तं पराजितः ॥ २१॥

तद्वक्त्रशेषमात्रान्तं कृत्वा शर्वस्य विग्रहम् ।
शुक्तिशित्यं तदामङ्गं वीरभद्रः क्षणात्ततः ॥ २२॥

इति लिङ्गपुराणोक्तं श्रीनृसिंहकृतं शरभस्तोत्रं सम्पूर्णम् ॥

